*तत्राद्यं यथा—*

किं नः फणिकिशोरीणां त्वं पुष्करसदां सदा ।
मुरलीध्वनिना नीवीं गोपबाल विलुम्पसि ॥

*अथ धृष्टता—*

**प्रकटप्रार्थनादिः स्यात्सम्भोगादेस्तु धृष्टता ॥ १८ ॥**

*यथा—*

कान्तः कैलासकुञ्जोऽयं रम्याहं नवयौवना ।
त्वं विदग्धोऽसि गोविन्द किं वा वाच्यमतः परम् ॥

**एवमेव तु गौणानां हासादीनामपि स्वयम् ।**
**विज्ञेयोपरसत्वस्य मनीषिभिरुदाहृतिः ॥ १९ ॥**

*अथानुरसाः—*

**भक्तादिभिर्विभावाद्यैः कृष्णसम्बन्धवर्जितैः ।**
**रसा हास्यादयः सप्त शान्तश्चानुरसा मताः ॥ २० ॥**

*तत्र हास्यानुरसः—*

ताण्डवं व्यधित हन्त कक्खटी मर्कटीं भ्रुकुटिभिस्तथोद्धुरम् ।
येन बल्लवकदम्बकं बभौ हासडम्बरकरम्बिताननम् ॥

*अथाद्भुतानुरसः—*

भाण्डीरकक्षे बहुधा वितण्डां वेदान्ततन्त्रे शुकमण्डलस्य ।
आकर्णयन्निर्निमिषाक्षिपक्ष्मा रोमाञ्चिताङ्गश्च सुरर्षिरासीत् ॥

**एवमेवात्र विज्ञेया वीरादेरप्युदाहृतिः ।**

---

कैलासवासिनीनामिव पुराणान्तरकथितरीत्या फणिकिशोरीणामप्युदाहृतिमुपरस एवावज्ञया वर्णयति—किं न इति । पुष्करसदां कालियह्रदस्य जलवासिनीनाम् ।

अत्र श्रीकृष्णस्य तदा बाल्येऽपि मुरलीध्वनिविशेषेण कृतकैशोरमानस्य बालेति सम्बोधनं तासामवैदग्ध्यमेव ज्ञेयम् ।

भक्तादिभिरिति । भक्ता अत्र पञ्चविधाः । शान्तस्तु रसशास्त्रान्तरप्रसिद्धो रूढः ।

कक्खटीनाम्नी ।

भाण्डीरकक्षे तदूर्ध्वगलतासु । "सौरभे च तृणे कक्षः शुष्ककाननवीरुधोः ।" इति विश्वः । "भाण्डीरवृक्षे" इति पाठस्तु सुगमः ।

अष्टावमी तटस्थेषु प्राकट्यं यदि बिभ्रति ॥ २१ ॥
कृष्णादिभिर्विभावाद्यैस्तदाऽप्यनुरसा मताः ।

*अथापरसः—*

कृष्णतत्प्रतिपक्षाश्चेद्विषयाश्रयतां गताः ॥ २२ ॥
हासादीनां तदा तत्र प्राज्ञैरपरसा मताः ।

*तत्र हास्यापरसः—*

पलायमानमुद्वीक्ष्य चपलायतलोचनम् ।
कृष्णमाराज्जरासन्धः सोल्लुण्ठमहसीन्मुहुः ॥

एवमन्येऽपि विज्ञेयास्तेऽद्भुतापरसादयः ॥ २३ ॥
उत्तमास्तु रसाभासाः कैश्चिद्रसतयोदिताः ।

*तथा हि—*

भावाः सर्वे तदाभासा रसाभासाश्च केचन ॥ २४ ॥
अमी प्रोक्ता रसाभिज्ञैः सर्वेऽपि रसनाद्रसाः ।
भारत्याद्याश्चतस्रस्तु रसावस्थानसूचिकाः ॥ २५ ॥
वृत्तयो नाट्यमातृत्वादुक्ता नाटकलक्षणे ।

इति रसामृतसिन्धावुत्तरविभागे रसाभासलहरी नवमी ॥ ९ ॥

ग्रन्थस्य गौरवभयादस्या भक्तिरसश्रियः ।
समाहृतिः समासेन मया सेयं विनिर्मिता ॥ १ ॥

---

अष्टाविति । अत्र जरासन्धस्य हासस्तावदपरस एव, कस्यचित्तद्वदासुरभावस्यापि । तदनुगतो हासश्चेत्तदा शुद्ध एव हास्यरसः ।

एवमिति । अत्र सर्वप्रकरणार्थः समस्य विन्यस्यते—

विभावाद्या मिथो योग्याः सम्पद्यन्ते रसाय ते ।
वैरस्यायान्यथा, सा तु योग्यता लोकविश्रुता ॥

नाट्यमातृत्वाद् नाट्य एवोपयुक्तत्वादित्यर्थः ।

नाटकलक्षणे = नाटकचन्द्रिकाख्ये स्वकृत इति ज्ञेयम् ।

इत्युत्तरविभागे नवलहर्यात्मके रसाभासलहरी नवमी ।

इति दुर्गमसंगमनीनाम्न्यां हरिभक्तिरसामृतसिन्धुटीकायां चतुर्थो विभागः ।

**गोपालरूपशोभां दधदपि रघुनाथभावविस्तारी ।**
**तुष्यतु सनातनोऽस्मिन्नुत्तरभागे रसामृताम्भोधेः ॥ २ ॥**

इति भक्तिरसामृतसिन्धौ गौणभक्तिरसादिनिरूपणनामा चतुर्थो विभागः ।

**रामाङ्गशक्र१४६३गणिते शाके गोकुलमधिष्ठितेनायम् ॥**
**भक्तिरसामृतसिन्धुर्विटङ्कितः क्षुद्ररूपेण ॥ १ ॥**

*** इति श्रीहरिभक्तिरसामृतसिन्धुः ***

॥ समाप्तः ॥

---

रामाङ्गेति । शालिवाहनस्य संवत्सरगणनया विक्रमादित्यस्यापि सा ज्ञेया, अङ्कस्य वामा गतिरिति प्रसिद्ध्या त्रिषष्ट्यधिकचतुर्दशशतीगणित इत्यर्थः, विक्रमादित्यस्य त्वष्टनवत्यधिकपञ्चदशशतीगणित इति ज्ञेयम् ।

विटङ्कितः उट्टङ्कितः, सुष्ठु रूपेणेत्येव पठितव्यं तेषां दीनंमन्यतामयपाठेऽपि तदसहिष्णुः सरस्वती क्षुद्रं सूक्ष्मं दुर्ज्ञेयं रूपं स्वरूपं यस्येति गत्यन्तरास्पदं पदं स्फोरयन्ती समाहितवती ।

श्रीकृष्णः सर्वपूर्णः स चरति विपुले गोकुले व्यक्ततत्त-
न्माधुर्यैश्वर्यवर्यः स च पशुपसुतानन्तलक्ष्मीभिरिष्टः ।
श्रीराधावर्गमध्ये स च मधुरगुणश्रीधुराधामधारी-
त्यस्मिन् ग्रन्थे रसाब्धावभिमतमहिमाधारसारप्रचारः ॥

यदपि च नातिविशुद्धा तदपि च सद्भिः कदाप्युरीकार्या ।
दुर्गमसङ्गमनीयं नौकेवास्यामृताम्भोधेः ॥

समाप्ता चेयं टीका तेषामेव प्रीतये भवतु ।

[ मूलं ३३२५ टीका ३६४४ समस्त ग्रन्थः ६९६९ । ]

# भक्तिरसामृतसिन्धौ

## उदाहृतश्लोकानामकाराद्यनुक्रमणी

